यस्य कस्याप्येकस्य वर्णस्य कार्यं समस्तस्य समाजस्य कार्यमस्ति । अत एव सर्वे वर्णाः सर्वेषां व्रतोत्सवादीनां सहर्षं समानं मानं कुर्वन्ति, यथासम्भवं स्वशक्त्या तदनुतिष्ठन्ति सम्यग्व्यहृरन्ति च ।

सर्गादौ भगवता प्रजापतिना यज्ञसहिताः प्रजाः सृष्ट्वा प्रोक्तं यदनेन यज्ञेन यूयमुत्तरोत्तरामभिवृद्धिं लभध्वम् । एष यज्ञाख्यो धर्मो नवनवानां वस्तुनामुत्पादनद्वारा युष्माकमभिमतानि पूरयिष्यति—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ ( गीता ३।१०

"यज्ञेन यज्ञमयजन्त देवाः" इति यजुर्वेदमन्त्रानुसारं मानवानां कल्याणार्थे प्रथमं देवैरेव यज्ञः समारब्धः । अतो यज्ञो मानवानां मुख्यो धर्मः प्रतिपादितोऽस्ति । शास्त्रेषु दानस्यात्यतिशयमहत्वमङ्कितमस्ति । बृहदारण्यकोपनिषद्येकमतिसुन्दरमुपाख्यानमुपलभ्यते ।

एकदा देवा मनुष्या असुराश्च प्रजापतेः समीपमुपस्थाय उपदेशार्थं प्रार्थनां चक्रुः । ततस्तेन प्रत्येकं द० द० द० इत्युक्त्वा ते पृष्टा अवगतं भवद्भिः ? तदनु तैरुक्तम्—ॐ अवगतमस्माभिः, भवता अस्मान् प्रति क्रमशः दाम्यथ, दत्त, दयध्वमित्युक्तम् । तदैव दैवी वागपि तमेवार्थमनुजगाद । "तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुः द० द० द० इति दाम्यथ, दत्त, दयध्वमिति, तदेतत् त्रयं शिक्षेरन् दमं दानं दयामिति।५।१। अस्मिन् उपाख्याने देवसदृशेभ्य उत्कृष्टपुरुषेभ्य इन्द्रियजयस्य, असुरेभ्यः क्रूरताप्रधानहिंसकपुरुषेभ्यो दयायाः, साधारणपुरुषेभ्यो दानस्य चोपदेशो दत्तोऽस्ति । अतः श्रुत्यनुसारं सर्वैर्यथाशक्ति दानमवश्यं प्रदेयम् ।

कर्मयोगे यावत्तपसोऽस्ति महत्त्वं न तावदस्त्यन्यस्य कस्यापि । उपनिषत्सु स्थाने स्थाने तपसो महत्त्वं प्रदर्शितमस्ति । श्रीमद्भागवते लिखितमस्ति यत् सर्गादौ लोकपितामहो भगवान् ब्रह्मा सृष्ट्यर्थं स्वमनसि चिन्तयन् त. प. इत्यक्षरद्वयं श्रुतवान्, यदकिञ्चनानां परम धनमुच्यते—

स चिन्तयन् द्व्यक्षरमेकदाम्भस्युपाश‍ृणोद् द्विर्गदितं बचो विभुः ।
स्पर्शेषु यत्षोडशमेकविंशं निष्किञ्चनानां नृप ! यद्धनं विदुः ॥ २।९।६ ॥

तदनुमार्गं विधाता दुश्वरं तपश्चचार। परिणामे प्रसन्नो भूत्वा भगवान् आविर्भूय प्रोवाच— तपः साक्षाद् मम हृदयमस्ति। अहञ्च तपस आत्मास्मि। अहं तपसैवेदं जगत् सृजामि पालयामि संहरामि च—

तपो मे हृदयं साक्षादात्माहं तपसोऽनघ !
सृजामि तयसैवेदं ग्रसामि तपसा पुनः ॥
बिभर्मि तपसा पूर्वं वीर्यं मे दुश्वरं तपः ॥

तपो हि प्राचीनस्य भारतस्यामूल्यो निधिरासीत्। ऋषयस्तु तपोधना एवोच्यन्ते स्म, न केवलमृषय एव राजानोऽपि स्वजीवने तपसः प्राधान्यं स्वीकृत्य वार्द्धक्ये विषयेभ्यो मनो नियम्य पुत्रे राज्यभारं समर्प्य कायक्लेशमगणयित्वा तपस्तप्तुमरण्यं प्रविशन्ति स्म। अत एव भगवान् मनुः रपि दुष्करस्य दुरापस्य च कार्यस्म तपः साध्यत्वमुक्तवान्—

यद्दुष्करं यद्दुरापं यद्दुर्गं पच्चदुस्तरम्।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमः ॥

आर्यजातेर्जीवनं धर्ममयमस्ति। धर्मस्य यज्ञदानतपांसि त्रीणि प्रधानान्यङ्गानि आवश्यककर्तव्यत्वेन शास्त्रेषु निर्दिष्टानि सन्ति। एषां त्यागः कदापि नोचितः। यत एतानि त्रीणि मनीषिणामपि पावनानि सन्ति। अत एवोक्तं गीतायां भगवता श्रीकृष्णेनार्जुनं प्रति—

यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ १८।५ ॥

हिन्दुजातेर्व्रतोत्सवेष्वेषां त्रयाणामेव समावेशो दृश्यते। अतो नियमितरूपेण व्रतोत्सवानुष्ठानस्य व्यवस्था हिन्दुसमाजे प्रवर्तते। समाजविज्ञानानुसारं धर्ममयजीवनयापनस्याज्ञा पुराणादिषु शास्त्रेषु प्रदत्ताऽस्ति। चरित्रसंगठनार्थं व्रतोत्सवो महानस्ति हितकारी। व्रतेषूपवासस्य प्राधान्याद् व्रतं तपोधर्मस्य मुख्यमङ्गमस्ति। व्रतोत्सवस्य तपोधर्ममूलकत्वेऽपि तत्र दानधर्मयज्ञधर्मयोरपि समावेशो विद्यते। तत्रत्यानामादर्शचरित्राणामनुशीलनेन मनसः समुन्नतौ चरित्रसंगठने च महत् साहाय्यमवाप्यते। व्रतोत्सवानामनुष्ठानेन आयुष आरोग्यस्य ऐश्वर्यस्य च लाभो भवति। श्रद्धापूर्वकं भारतीयव्रतोत्सवेष्वनुष्ठितेष्वन्नवस्त्रादिदानस्य, नियमसयमोपवासादिरूपस्य तपसः, भगवत्प्रीतिसम्पादनदैवीजगत्संवर्द्धनादिरूपस्य यज्ञस्य च समावेशाद् भक्त्या तत्पालनमत्यावश्यकमस्ति।

तस्मात् समस्तस्य जगतोऽत्यन्तमुपकारित्वाद् व्रतानि उत्सवाश्च अनिवार्यतया सर्वेषा मनुष्ठानीयतामर्हन्तीति निश्चप्रचम् ॥

## पुराणक्रमसंख्यादानादिमाहात्म्यम्

ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ।
लक्षार्द्धार्द्धन्तु तद् ब्राह्मं लिखित्वा सम्प्रदापयेत् ॥ १ ॥
वैशाख्यां पौर्णमास्याञ्च स्वर्गार्थी जलधेनुमत् ।
पाद्मं द्वादशसाहस्रं ज्येष्ठे दद्याच्च धेनुमत् ॥ २ ॥
वराहकल्पवृत्तान्तमधिकृत्य पराशरः ।
त्रयोविंशतिसाहस्रं वैष्णवं प्राह चार्पयेत् ॥ ३ ॥
जलधेनुमदाषाढ्यां विष्णोः पदमवाप्नुयात् ।
चतुर्दशसहस्राणि वायवीयं हरिप्रियम् ॥ ४ ॥
श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत् ।
तद्यल्लिखित्वा तद् विप्रे श्रावण्यां गुड़धेनुमत् ॥ ५ ॥
यत्राधिकृत्य गायत्रीं कीर्त्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद् भागवतमुच्यते ॥ ६ ॥
सारस्वतस्य कल्पस्य प्रोष्ठपद्यान्तु तद् ददेत् ।
अष्टादश सहस्राणि हेमसिंहसमन्वितम् ॥ ७ ॥
यत्राह नारदो धर्मान् वृहत्कल्पाश्रितानिह ।
पञ्चविंशसहस्राणि नारदीयं तदुच्यते ॥ ८ ॥
सधेनुञ्चाश्विने दद्यात् सिद्धिमात्यन्तिकीं लभेत् ।
यत्राधिकृत्य शत्रूणां धर्माधर्मविचारणा ॥ ९ ॥
कार्त्तिक्यां नवसाहस्रं मार्कण्डेयमथापयेत् ।
अग्निना यद् वशिष्ठाय प्रोक्तञ्चाग्नेयमेव तत् ॥ १० ॥
लिखित्वा पुस्तकं दद्यान् मार्गशीर्ष्यां स सर्वदः ।
द्वादशैव सहस्राणि सर्वविद्यावबोधनम् ॥ ११ ॥
चतुर्दशसहस्राणि भविष्यं सूर्य्यसम्भवम् ।
भवस्तु मनवे प्राह दद्यात् पौष्यां गुड़ादिमत् ॥ १२ ॥
सावर्णिना नारदाय ब्रह्मवैवर्त्तमीरितम् ।
रथान्तरस्य वृत्तान्तमष्टादशसहस्रकम् ॥ १३ ॥
माघ्यां दद्याद् वराहस्य चरितं ब्रह्मलोकभाक् ।
यत्राग्निलिङ्गमध्यस्थो धर्मान् प्राह महेश्वरः ॥ १४ ॥

आग्नेयकल्पे तल्लिङ्गमेकादशसहस्रकम् ।
तद् दत्त्वा शिवमाप्नोति फाल्गुन्यां तिलधेनुमत् ॥ १५ ॥
चतुर्दशसहस्राणि वाराहं विष्णुनेरितम् ।
भूमौ वराहचरितं मानवस्य प्रवृत्तितः ॥ १६ ॥
सहेमगरुडञ्चैत्र्या पदमाप्नोति वैष्णवम् ।
चतुरशीतिसाहस्रं स्कान्दं स्कन्देरितं महत् ॥ १७ ॥
अधिकृत्य सधर्मांश्च कल्पे तत् पुरुषेऽर्पयेत् ।
वामनं दशसाहस्रं धौमकल्पे हरेः कथाम् ॥ १८ ॥
दद्यात् शरदि विषुवे धर्मार्थादि निबोधनम् ।
कूर्मञ्चाष्टसहस्रञ्च कूर्मोक्तञ्च रसातले ॥ १९ ॥
इन्द्रद्युम्नप्रसङ्गेन दद्याद् तद्धेमकूर्मवत् ।
त्रयोदशसहस्राणि मात्स्यं कल्पादितोऽब्रवीत् ॥ २० ॥
मत्स्यो हि मनवे दद्याद् विषुवे हेममत्स्यवत् ।
गारुडञ्चाष्टसाहस्रं विष्णूक्त तार्क्ष्यकल्पके ॥ २१ ॥
विश्वाण्डाद् गरुडोत्पत्तिं तद् दद्याद्धेमहंसवत् ।
ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्वाब्रवीत् तु यत् ॥ २२ ॥
तच्च द्वादशसाहस्रं ब्रह्माण्डं तद् द्विजेऽर्पयेत् ।
भारते पर्वसमाप्तौ वस्त्रगन्धस्रगादिभिः ॥ २३ ॥
वाचकं पूजयेदादौ भोजयेत् पायसैर्द्विजान् ।
गो-भू-ग्रामसुवर्णादि दद्यात् पर्वणि पर्वणि ॥ २४ ॥
समाप्ते भारते विप्रं संहितापुस्तकान् यजेत् ।
शुभे देशे निवेश्याथ क्षौमवस्त्रादिना वृतान् ॥ २५ ॥
नरनारायणौ पूज्यौ पुस्तकं कुसुमादिभिः ।
गोऽन्नभूहेम दत्त्वाथ भोजयित्वा क्षमापयेत् ॥ २६ ॥
महादानानि देयानि रत्नानि विविधानि च ।
मासकौ द्वौ त्रयश्चव मासे मासे प्रदापयेत् ॥ २७ ॥
अयनादौ श्रावकस्य दानमादौ विधीयते ।
श्रोतृभिः सकलैः कार्य्यं श्रावके पूजनं द्विज ॥ २८ ॥
इतिहासपुराणानां पुस्तकानि प्रयच्छति ।
पूजयित्वायुरारोग्यं स्वर्गमोक्षमवाप्नुयात् ॥ २९ ॥

( अग्निपुराणे २७२।१-२९ )

लेखक वंशपरिचयः

पुराणादिषु शास्त्रेषु सङ्गीतयशसो मुदा।
देवश्लाघ्यस्य दिव्यस्य सर्वप्राणिहितैषिणः॥ १॥
भारतस्योत्तरे भागे देवरियाख्यमण्डले।
धर्मागतछपरायां प्रसिद्धायां स्वमण्डले॥ २॥
धनधान्यदिना पूर्णे सदाचारमनोरमे।
कुवेरनाथसविधे त्रिपाठिब्राह्मणान्वये॥ ३॥
रमेशमणिविदुषः प्रख्यातस्य सुकीर्तये।
नागेश्वरमणि र्विद्वान् तनयोऽभूद् द्विजाग्रणीः॥ ४॥
तदात्मजाश्च चत्वारो जाता विद्याविशारदाः।
शीलसौजन्यसम्पन्ना विनीता बुद्धिशालिनः॥ ५॥
बलदेवः सुदामा च भरोसापण्डितस्तथा।
चतुर्थोऽस्ति श्रीकृष्णमणि शास्त्री प्रसन्नधीः॥ ६॥
माता फूलमती देवी श्रीमती शुभलक्षणा
अजीजनत् सुतानेतान् मोदनिर्भरमानसा॥ ७॥
चत्वारो भ्रातरो ह्येते लोककल्याणकारिणः।
सर्वेऽपत्यकलत्रादिसुखिनः सौम्यमूर्तयः॥ ८॥
वात्सल्यस्नेहभाक् तेषु कनीयान् ग्रन्थलेखकः।
श्री श्रीकृष्णमणिर्वाग्मी काशीवासी सुधीवरः॥ ९॥
एतस्याप्यद्भुताः सन्ति तनया भाग्यशालिनः।
विजयश्च सुरेशश्च महेशश्च दिनेशकः॥ १०॥
प्रासोष्ट शुभगानेतान् द्वे सुते अपि शोभने।
चन्द्रकलां च सावित्रीं राजदेवी मुदान्विता॥ ११॥
सर्वसौभाग्यसम्पन्ना गृहिणी धर्मचारिणी।
रससन्ततिमाता सा मोदमाप्नोति सर्वदा॥ १२॥
एतेषु विजयस्यास्ति पुत्रो विनयनामकः।
बालविद्यालयेऽधीते वयस्यै र्मोदमावहन्॥ १४॥
कुवेरनाथकृपया विप्राणां च प्रसादतः।
स्वधर्मकर्मनिरतो वंशोऽयं भ्राजते भुवि॥ १५॥